॥ देवी उपनिषत् ॥

॥ अथ देव्युपनिषत् ॥

अथर्ववेदीय शाक्तोपनिषत् ॥

श्रीदेव्युपनिषद्विद्यावेद्यापारसुखाकृति ।
त्रैपदं ब्रह्मचैतन्यं रामचन्द्रपदं भजे ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा सस्तनूभि-
व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः
स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः
स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ सर्वे वै देवा देवीमुपतस्थुः । कासि त्वं महादेवि ।
साब्रवीदहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं
जगच्छून्यं चाशून्यं च ।
अहमानन्दानानन्दाः विज्ञानाविज्ञाने अहम् । ब्रह्मा ब्रह्मणि
वेदितव्ये । इत्याहाथर्वणि श्रुतिः ॥ १॥

अहं पञ्चभूतान्यपञ्चभूतानि । अहमखिलं जगत् ।
वेदोऽहमवेदोऽहम् । विद्याहमविद्याहम् । अजाहमनजाहम् ।

अधश्चोर्ध्वं च तिर्यक्चाहम् ।
अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणावुभौ बिभर्म्यहमिन्द्राग्नी अहमश्विनावुभौ ।
अहं सोमं त्वष्टारं पूषणं भगं दधाम्यहम् ।
विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि । अहं
दधामि द्रविणं हविष्मते सुप्राव्ये ३ यजमानाय सुन्वते ॥ २॥

अहं राष्ट्री सङ्गमनी वसूनामहं सुवे पितरमस्य
मूर्धन्मम योनिरप्स्वन्तः समुद्रे । य एवं वेद स
देवीपदमाप्नोति । ते देवा अब्रुवन् ।
नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ ३॥

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरां नाशयते तमः ॥ ४॥

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति
। सा नो मन्द्रेशमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ ५॥

कालरात्रिं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् ।
सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् ॥ ६॥

महालक्ष्मीश्च विद्महे सर्वसिद्धिश्च धीमहि ।
तन्नो देवी प्रचोदयात् ॥ ७॥

अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव । तां देवा
अन्वजायन्त भद्रा अमृतबन्धवः ॥ ८॥

कामो योनिः कामकला वज्रपाणिर्गुहा हसा ।

मातरिश्वाभ्रमिन्द्रः पुनर्गुहा सकला मायया च
पुनः कोशा विश्वमाता दिवि द्योम् ॥ ९॥

एषात्मशक्तिः । एषा विश्वमोहिनी
पाशाङ्कुशधनुर्बाणधरा । एषा श्रीमहाविद्या ।
य एवं वेद स शोकं तरति ।
नमस्ते अस्तु भगवति भवति मातरस्मान्पातु सर्वतः ।
सैषाष्टौ वसवः । सैषैकादश रुद्राः । सैषा
द्वादशादित्याः । सैषा विश्वेदेवाः
सोमपा असोमपाश्च । सैषा यातुधानु असुरा रक्षांसि
पिशाचयक्षाः सिद्धाः ।
सैषा सत्वरजस्तमांसि । सैषा प्रजापतीन्द्रमनवः ।
सैषा ग्रहा नक्षत्रज्योतींषि
कलाकाष्ठादिकालरूपिणी । तामहं प्रणौमि नित्यम् ।
तापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम् ।
अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम् ॥ १०॥

वियदाकारसंयुक्तं वीतिहोत्रसमन्वितम् । अर्धेन्दुलसितं
देव्या बीजं सर्वार्थसाधकम् ॥ ११॥

एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः ।
ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ॥ १२॥

वाङ्मया ब्रह्मभूतस्मात्षष्ठं वक्त्रसमन्वितम् । सूर्यो
वामश्रोत्रबिन्दुः संयुताष्टकतृतीयकः ॥ १३॥

नारायणेन संयुक्तो वायुश्चाधरसंयुतः । विच्चे
नवार्णकोऽर्णः स्यान्महदानन्ददायकः ॥ १४॥

हृत्पुण्डरीकमध्यस्थां प्रातःसूर्यसमप्रभाम् ।
पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम् ।
त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे ॥ १५॥

नमामि त्वामहं देवीं महाभयविनाशिनीम् ।
महादुर्गप्रशमनीं महाकारुण्यरूपिणीम् ॥ १६॥

यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यतेऽज्ञेया ।
यस्या अन्तो न विद्यते तस्मादुच्यतेऽनन्ता ।
यस्या ग्रहणं नोपलभ्यते तस्मादुच्यतेऽलक्ष्या । यस्या
जननं नोपलभ्यते तस्मादुच्यतेऽजा ।
एकैव सर्वत्र वर्तते तस्मादुच्यत एका । एकैव विश्वरूपिणी
तस्मादुच्यते नैका ऽत एवोच्यतेऽज्ञेयानन्तालक्ष्याजैका नैकेति ।
मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी ।
ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी ॥ १७॥

यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता ।
[दुर्गात्संत्रायते यस्माद्देवी दुर्गेति कथ्यते ॥ १८॥

प्रपद्ये शरणं देवीं दुंदुर्गे दुरितं हर ॥]
तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् ।
नमामि भवभीतोऽहं संसारार्णवतारिणीम् ॥ १९॥

इदमथर्वशीर्षं योऽधीते
पञ्चाथर्वशीर्षजपफलमवाप्नोति ।
इदमथर्वशीर्षं ज्ञात्वा योऽर्चां स्थापयति ।
शतलक्षं प्रजस्वापि सोऽर्चासिद्धिं च विन्दति ।
शतमष्टोत्तरं चास्याः पुरश्चर्याविधिः स्मृतः ॥ २०॥

दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते । महादुर्गाणि तरति महादेव्याः प्रसादतः ॥ २१॥

प्रातरधीयानो रात्रिकृतं पापं नाशयति ।
सायमधीयानो दिवसकृतं पापं नाशयति ।
तत्सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति । निशीथे तुरीयसन्ध्यायां जप्त्वा वाक्सिद्धिर्भवति ।
नूतनप्रतिमायां जप्त्वा देवतासांनिध्यं भवति ।
प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति ।
भौमाश्विन्यां महादेवी संनिधौ जप्त्वा महामृत्युं तरति । य एवं वेदेत्युपनिषत् ॥ २२॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभि-
र्व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः
स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः
स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति श्रीदेव्युपनिषत्समाप्ता ॥